# श्रीनागोजीभट्टकृत आशौचेन्दुशेखरः

**मातृका-सम्पादकः—अङ्कुरनागपालः**

शोधार्थी, विशिष्टाद्वैत-वेदान्त-विभागः,
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविश्वविद्यालयः (दिल्ली)

महामहोपाध्यायो नागोजीभट्टश्रीपादः (विद्वद्भिः श्रीन्नागेशभट्टेतिनाम्ना समुपासितः; 1673-1743 ई.) सतीगर्भसूनुर्हरिदीक्षितशिष्यो ब्राह्मणप्रवरो महाराष्ट्रक्षेत्रे शिवभट्टपुत्रत्वेन सञ्जातः, व्याकरणागमधर्मशास्त्रयोगसाहित्यादिषु च पारठतः। बहवश्चानेन कृता ग्रन्थाः परिभाषेन्दुशेखर-लघुमञ्जूषा-वैयाकरणसिद्धान्तमञ्जुषालघुशब्देन्दुशेखरस्फोटवाद-महाभाष्यप्रदीपोद्योतमहाभाष्यप्रत्याख्यानसङ्ग्रहप्रायश्चित्तेन्दुशेखर-तीर्थेन्दुशेखरतिथीन्दुशेखराचारेन्दुशेखरश्राद्धेन्दुशेखरेत्यादयः सर्वत्र प्रसिद्धाः; पठ्यमानाश्च। अतो नात्र विस्तरेण परिचयोऽपेक्षितः। तेनैव कृतोऽयं धर्मशास्त्रीयो निबन्धग्रन्थः 'आशौचेन्दुशेखरे' तिनामा। 'आशौचनिर्णयः' इतिनामान्तरेण प्रसिद्धश्चायं कुत इदानींयावन्न प्रकाशित इत्याश्चर्यास्पदम् (*'काशी की पाण्डित्य परम्परा', पृ.64-67, 49-50)। तस्मान्महत्या श्रद्धयाऽयं सम्पादितः। अत्र गर्भनाशजननाशौचम्, कर्मानधिकारलक्षणम्, मरणाशौचम्, दाहाद्यधिकारः, शवनयनप्रकारः, अस्थिसञ्चयनम्, अतिक्रान्ताशौचम्, आचार्याद्याशौचम्, आशौचसन्निपातः, अनुगमनाशौचम्, आशौचान्नभक्षणविचारः, रोदनविचारः, आशौचापवादाः, शान्तिविधानानि-इत्यादीनि सम्यगाकलितानि। ग्रन्थस्यास्यैकैव मातृका मया लब्धा—घनश्यामनाम्ना केनचिल्लिपिकेन 1734तमे शके (1812 ई.) विलिखिता प्रायशः स्पष्टाक्षरा (*'आशौचेन्दुशेखर' (सं.665), पाण्डुग्रन्थागार, एम.टी.बी. कॉलेज (सूरत)—ततो मातृकान्तरेण पाठालोचनस्यावकाशाभावः। पिपठिषूणां सौकर्याय विषयानुरोधेन संकलय्याऽङ्कनाद्बहुभिः कण्डिकाभिर्विभक्तो ग्रन्थः।।

(1) अथाऽऽशौचं निरूप्यते। तत्र प्रथमतो 'गर्भनाशजननाशौचम्'। तत्र पराशरः—"आ चतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः। अत ऊर्ध्वं प्रसूतिः स्यात्..." (पराशरस्मृ. 3.16) इति। तत्र 'स्रावे' आद्यमासत्रये मातुः त्रिरात्रमाशौचम्, तदुपरि आ षष्ठं माससमसठ्यदिनम्। सपिण्डानां तु गर्भग्रहणप्रभृतिमासचतुष्टयपर्यन्तगर्भनाशे स्नानमात्रेण शुद्धिः। पञ्चमषष्ठयोस्तु-'गर्भपाते' सपिण्डानां त्रिरात्रम्। केचित्तु-आद्यमासत्रये विप्रे त्रिदिनान्ते त्रयो दिवसा अधिकाः, राजन्ये चतूरात्रम्, वैश्ये पञ्चाहम्, शूद्रे षडहम्; चतुर्थादौ तु माससमसठ्यादिनम्-इत्याहुः; तद्वैषम्यादयुक्तम्। सप्तममासप्रभृति तु-'जनने' मातुः सपिण्डानां च सम्पूर्णमाशौचम्। तच्च-विप्रे दशाहम्, क्षत्रे द्वादशम्, वैश्ये पञ्चदशम्, शूद्रे मासम्, सच्छूद्रे पक्षम्; सर्ववर्णेषु दशाहं वा। तत्र मातुः दशाहमस्पृश्यत्वं च।

(2) 'कर्मानधिकारलक्षणम्' तु-स्त्रीजनन्या मासं पुत्रस्वाविंशतिरात्रम्। इदं च स्वस्वाशौचोत्तरम्। केचित्तु-पुत्रस्वामासं स्त्रीस्वाश्चत्वारिंशद्दिनम्-इत्याहुः; तदयुक्तम्। पितुस्तु-सचैलस्नानपर्यन्तमस्पृश्यत्वम्, कर्मानधिकारस्तु स्वस्वाशौचव्यापी। एवं च पुत्रजन्मदिवसे पितुर्जातकर्मदानादौ वचनादधिकारः; सोऽथ छिन्नायां नालायाम्। तत्र विप्राणां प्रतिग्रहेऽपि न दोषः, तत्र सिद्धान्नभोजने तु चान्द्रायणम्; तदहर्दानादावधिकारः-इत्येके। तथा प्रथमषष्ठदशमदिवसेषु जन्मदाख्यदेवतापूजादानादौ वचनादेवाधिकारः। सपिण्डानां तु-जननाशौचेऽस्पृश्यत्वं नास्त्येव, किन्तु कर्मानधिकारमात्रम्। एवं चाशौचं द्विविधम्-अस्पृश्यत्वप्रयोजकं कर्मानधिकारप्रयोजकं चेति बोध्यम्। माधवस्तु-सूतिकाव्यतिरिक्तसपिण्डानां सप्तमे मासि जनने सप्तरात्रम्, अष्टमेऽष्टरात्रम्, नवमप्रभृति तु तज्जातिप्रयुक्तम्-इत्याह। कूटस्थमारभ्य सप्तमपर्यन्ताः 'सपिण्डाः', ततः सप्त 'समानोदकाः', तदुत्तरमेकविंशतिपर्यन्ता 'गोत्रजाः'। तत्र समानोदकानां त्रिरात्रं कर्मानधिकार एव, गोत्रजानामेकरात्रम्।

(3) 'पितृगेहे कन्याप्रसूतौ' पित्रोस्तद्गृहवृत्तीनां भ्रातृणां चैकाहः। एवं भ्रात्रादिगृहे भगिन्यादिप्रसवेऽपि तेषामेकाहः।

माधवस्तु-पितृगृहे कन्यायाः प्रसूतौ पित्रोस्त्रिरात्रम्, तद्गृह-वर्तिभ्रातृणामेकाहः-इत्याह। पितृगृहवर्तिपितृसपिण्डानामेकाह इति स्मृत्यर्थसारः। निष्प्राणनिर्गमेऽपि सम्पूर्णमेव जननाशौचम्। नालच्छेदात्पूर्वं जातशिशुमरणे तु सपिण्डानां दिनत्रयं जननाशौचम्, मातुस्तत्रापि सम्पूर्णमेव। नालच्छेदानन्तरमा-शौचमध्ये शिशुमरणेऽपि सम्पूर्णमेव जननाशौचम्। नाम-करणात्पूर्वं शिशुमरणे न मरणाशौचम्, किन्तु स्नानमात्रम्। शिशोश्च निखननमेव, नाग्न्युदकदाने। इति जननाशौचनिर्णयः।।

(4) अथ 'मरणाशौचनिर्णयः'। नामकरणानन्तरं चूडाकरणपर्यन्तम्, तदभावे तृतीयवर्षपूर्तिपर्यन्तदाहनिखननयोः विकल्पः। तत्र दन्तजननात्पूर्वं शिशुमरणे दाहे सपिण्डानामेकाह-माशौचम्, निखनने सद्यः शौचम्। सोदकानां तु-अनुपनीतमरणे नाशौचम्; किन्तु स्नानमात्रम्। 'नामकरणम्' आशौचान्तदिनोत्तर-दिनोपलक्षणम्। 'दन्तजननम्' सप्तममासोपलक्षणम्। अत्र तदुद्देशेन सवयोभ्यो दुग्धदानं द्वितीयदिने कार्यम्। दाहपक्षे-दाहोऽस्य अमन्त्रक एव। सप्तममासप्रभृतिचूडाकरणपर्यन्तं तदभावे तृतीयवर्षपूर्तिपर्यन्तं खनन एकाहम्, दाहे त्रिरात्रम्। अत्र क्षत्रियादिविषये राजनि त्र्यहम्, वैश्ये त्रिदिनम्। निवृत्तचूडक्षत्रियस्य षड्वर्षान्तर्मरणे षड्दिनम्, वैश्यस्य नव। चूडोत्तरं षडब्दमध्ये क्षत्रियवैश्ययोर्मृतावपि त्र्यहमेवेत्येके, इदं वेदाग्निमत्क्षत्रियादिपरम् इत्यन्ये।

(5) शूद्रस्य तृतीयवर्षोत्तरं पञ्चाब्दमध्ये त्र्यहम्; ततः स्वजात्युक्तम्। त्रिवर्षन्यूने शूद्रे मृते पञ्चाहः। अत ऊर्ध्वम् आ विवाहाद् आ षोडशाब्दाद् द्वादशाहं ततो मासः-इत्यन्ते; इदमेव युक्तम्। ऊनद्व्यब्दस्य निखननं मुख्यम्, अनुगमन-मैच्छिकम्। पूर्णद्विवर्षस्य दाहो मुख्यः, अनुगमनं चावश्यकम्। ऊनद्व्यब्दे मृते पित्रोरेवास्पृश्यत्वम्, नेतरेषाम्; कर्मानधिकारस्तु सर्वेषामेव। एतदुद्देशेन पायसवस्त्रादिदानं सवयोभ्यः। चौलोत्तरं तदभावे पूर्णत्रिवर्षस्य पञ्चवर्षपर्यन्तं लौकिकाग्निना दाहः। अनुगमनमुदकदानं भूमौ पिण्डदानं सवयोभ्यो भोजनदानं चावश्यकं त्रिरात्रमाशौचं च। तदूर्ध्वमुपनयनात्सपिण्डीकरणवर्जं सर्वम्। आशौचं तु त्रिरात्रमेव-इत्येके। सांवत्सरादि तु नैषाम्-इति देवयाज्ञिकः। स्त्रीशूद्रयोस्तु कृतचूडयोरपि उदकदानादि-वैकल्पिकम्। लौकिकाग्नेश्च ग्रहणे चण्डालाग्निचित्ताग्निसूति-काग्निपतिताग्न्यमेध्याग्नीन् वर्जयेत्, शूद्राहृतं च। इन्धन-घृतादिकमपि श्मशाने शूद्रानीतं वर्जयेत्।

(6) एकादशदिनप्रभृति यावदुपनयनं पित्रोः पुमपत्ये स्त्र्यपत्ये च मृते त्रिरात्रम्-इति विज्ञानेश्वरः। माधवस्तुस्त्र्यपत्ये षष्ठमासं यावदेकाहः, ततस्त्रिरात्रमित्याह; युक्तं चैतत्। सपिण्डानां तु स्त्र्यपत्यमरणे चौलपर्यन्तं सद्यः शौचम्; कृतचूडायाः सम्पूर्णत्रिवर्षाया वा यावद्वाग्दानमेकाहः। वाग्दानानन्तरं विवाहात्पूर्वं मरणे सति पितृसपिण्डानां भर्तृसपिण्डानां च त्रिरात्रम्। अप्रत्तायाश्च पितृकुल आशौचप्रयोजकं त्रिपुरुषं सापिण्ड्यं दाहादि च यावदुपनयनं यावद्विवाहश्च स्त्रीणाममन्त्रकमेव। जननेऽनुपनीतमरणे चातिक्रान्ताशौचं नास्ति। पितुस्तु यदा कदाप्यपत्यजननश्रवणे स्नानं भवत्येव। दशाहादिमध्ये ज्ञाते तु शेषाहोभिः शुचिर्बोध्या। अनुपनीतमरणेऽतिक्रान्तेऽपि स्नानं भवत्येव-इति स्मृत्यर्थसारे। उपनीतादिमरणे तुत्र्यह एव।

(7) तत्र 'दाहाद्यधिकारिणः'। तत्र मुख्य औरसः पुत्रोऽधिकारी, तद्बहुत्वे ज्येष्ठः, तदभावेऽसन्निधाने पातित्यादिना-ऽनधिकारे वा कनिष्ठः। तत्र विभक्तानां स्वत एव। साधारणेन विभक्तानां स्वस्वांशप्रदानसम्पादितसाधारण्यकानेकद्रव्येण केन ज्येष्ठेनैव सपिण्डीकरणान्तक्रिया कार्या। तदुत्तरसांवत्सरादिकं त्वविभक्तानामेकेनैव कार्यम्; विभक्तानां तु पृथक् पृथक्। स्मृत्यर्थसारकृतस्तु-षोडशश्राद्धान्तमेकेनैव। सपिण्डीकरणं तु यदि विभक्ताः सर्वे सधना वृद्धिकामाश्च पृथक् पृथगेकदिने एव कुर्युः; अन्यथा तु ज्येष्ठेनैवेत्याहुः। तत्र यदा ज्येष्ठासन्निधानेन कनिष्ठः करोति, तदा सपिण्डीकरणपर्यन्तमेव कुर्यात्। यदि स्वयं साग्निकस्तदा सपिण्डीकरणमप्येकादशे द्वादशे वाऽह्नि कुर्यात्। निरग्निकेन तु-चरमकालं यावज्ज्येष्ठप्रतीक्षा कार्या। तन्मध्ये ज्ञाते ज्येष्ठेनैव कार्यम्, नो चेच्चरमकाले कनिष्ठेनापि कार्यम्।

(8) तदभावे पुत्रिकापुत्रक्षेत्रजगूढजकानीनपौनर्भवदत्तक-क्रीतकृत्रिमदत्तात्मसहोढजअपविद्धाः क्रमेण पूर्वाभावे परे परे। ''अस्यां यो जायते पुत्रः स मे पुत्रो भवेत्'' इति संविदा दत्तकन्यापुत्रः 'पुत्रिकापुत्रः'। अयं मातामहस्यैव; संविदा तु बीजिनोऽपि। 'क्षेत्रजः' वाग्दत्तविधवायां देवरादुत्पन्नः पुत्रजननासमर्थस्य जीवतोऽपि पत्युर्नियोगेन सवर्णाज्जातश्च।

अयं क्षेत्रिण एव; संविदा तु बीजिनोऽपि। पुरुषविशेषजत्वानिश्चयेन प्रच्छन्नभर्तृगृहे सवर्णादुत्पन्नो 'गूढजः'; सवर्णजत्वानिश्चये तु त्याज्यः। अयं च क्षेत्रिण एव। नियोगं विनाऽतिभावः सर्वणादेवापरिणीतायामुत्पन्नः 'कानीनः'। अयं मातामहस्यैव-इति तु वसिष्ठः, परिणेतुः-इति मनुः। पत्या भुक्तायामभुक्तायां वा जीवता त्यक्तायां विधवायां वा सवर्णाज्जातः 'पौनर्भवः'। अयं च बीजिन एव। मातापितृभ्यामन्यतराभावेऽन्यतरेणोभाभ्यां वा भरणासामर्थ्येण विधिपूर्वं दत्तः प्रतिठाहीतृसर्वणो 'दत्तकः'। अयं प्रतिठाहीतुरेव। अनापदि तु पुत्रदानं निषिद्धम्। अत्र पत्युः पत्न्यनुमत्या एव दातृत्वम्, अत्यन्तापदि तदनुमत्यलाभे स्वातन्त्र्यमपि। पत्न्यास्तुपत्यनुमत्या एव, मृते तु तस्मिन् स्वातन्त्र्यम्। ज्येष्ठस्तु सर्वथा देयः। 'क्रीतः' मातापितृभ्यां पूर्ववत्। 'कृत्रिमः' मातापितृविहीनः प्रौढो विप्रत्वादिनापरीक्षितः सवर्णो धनादिलोभेन स्वयं पुत्रार्थिना पुत्रीकृतः। 'स्वयंदत्तः' 'पितृभ्यां हीनस्ताभ्यामकारणत्यक्तो दातश्चहं पुत्रः' इत्यात्मानं दत्तवान् पूर्ववद्गृहीतः। 'सहोढजः' सवर्णजगर्भस्थितो गर्भिण्यां परिणीतायां पश्चादुत्पन्नः सहोढः पुत्रः। पुरुषसम्बन्धान्न कन्यात्वहानिः, किन्तु मन्त्रवत्संस्कारेणैवेति तस्या अपि विवाहसम्भवः। 'अपविद्धः' पितृभ्यां तदन्यतरेण वा दोषाभावेऽपि भरणासामर्थ्येण त्यक्तः, ज्ञातपित्रादिः सवर्णः पुत्रत्वेन परिगृहीतः। एषु-औरसपुत्रस्य पुत्रिकापुत्रस्य चानुपनीतस्यापि अधिकारः, स च कृतचूडस्य एव। पूर्णत्रिवर्षस्याकृतचूडस्यापि, तेनापि मन्त्रवदेव पित्रोरौर्ध्वदैहिकं कार्यम्। अशक्तौ त्वग्निदानमात्रं समन्त्रकं तेन कार्यम्; अन्यत्तु अन्येन।

(9) एवं पत्न्यापि समन्त्रकमग्निदानमात्रमवश्यं कार्यम्, अन्ये तूपनीता एवाधिकारिणः। द्वादशविधपुत्राभावे पत्नी पतिश्च। ''कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्याः क्रिया नृप'' इति विष्णुपुराणं (3.13.33) तु आसुरादिविवाहोढाविषयम्, असवर्णाविषयम्-इति शूलपाणिः। अत्राविभक्तसंसृष्टविषये-यद्यपि भ्रातुरेव रिक्थाधिकारोऽस्ति, तथापि क्रियाधिकारः पत्न्या एव; वचनात्। विभक्ता संसृष्टस्य तु रिक्तहरापि सैव। पत्न्यभावे विभक्ता संसृष्टस्य दुहिता, रिक्थहरत्वात्; तत्रापि संस्कृता एव। अनूढकन्यान्तरेण रिक्थहरणेऽपि वचनात्सैवाधि-कारिणी, तदभावे दौहित्रस्तद्धर्तृत्वात्, तदभावे भ्राता, तदभावे तत्पुत्रः।

यत्तु—''भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्'' (मनुस्मृ. 9.182) इति मनुवचनम्-तत्तु तस्य पुत्रीकरणसम्भवेऽन्यस्य तत्करण-निषेधार्थम्, न तु कन्यादिसत्त्वे पुत्रत्वप्रतिपादकम्; त्रयोदश-पुत्रत्वापत्तेः। तथा च ''पुत्रान् द्वादशानाह'' इति द्वादश-सठ्याविरुध्येत्।

(10) किञ्च—''पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः'' (याज्ञ.स्मृ. 2.135) इति रिक्थग्रहणक्रमबोधके याज्ञवल्क्यवचसि भ्रातृपुत्राणां भ्रात्रनन्तरस्थाननिवेशानुपपत्तिः; तेषां पुत्रत्व इतरपुत्रवत्पत्न्याः पूर्वमेव निवेशौचित्यात्। मिताक्षराऽपि एवमेव। न चैवम्-''अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्। स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाः'' (संस्काररत्नमाला, पृ.1009) इत्यादिबृहत्पराशरादिविरोधः-इति वाच्यम्। ''जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः'' (तैत्ति.सं.6.3.10.5) इत्यादिशास्त्रबोधिता-प्रजत्वप्रयुक्तदोषनिवृत्तिः पुत्रकार्यभूता द्वादशविधपुत्रभिन्नेनापि भ्रातृसुतेन पितृव्यस्य भरतीति ज्ञापनार्थं तस्य सत्त्वात्। युक्तं चैतत्; स्वपुत्रेणेव भ्रातृसुतेनापि समस्तपितॄणां पिण्डादिनिर्वाहस्य वंशविच्छेदपरिहारस्य च सम्भवात्। तादृशज्ञापनफलं च भ्रातृपुत्रवतो पुत्रस्य परलोकार्थिततया इतरदत्तकादिस्वीकारनिरासः। पुत्रसदृशस्य भ्रातृपुत्रस्य एव पुत्रनिधितया स्वीकार उचित इति न्यायसिद्ध एवायमर्थो वचनेन ज्ञाप्यत इत्यन्यदेतत्। एवं च पुत्रत्वेनापरिगृहीतानां भ्रातृसुतानां पत्न्यादिषुसक्तपुत्रकार्यपैतृक-ऋणापाकरणकारिणामपि व च नादृक्थग्रहणौर्ध्वदैहिकाद्यनधिकार इति सिद्धम्।

(11) अविभक्तसंसृष्टस्य तु पत्न्यभावे भ्राता। तत्र सोदरासोदरसमवाये सोदर एव, तत्रापि ज्येष्ठकनिष्ठसमवाये कनिष्ठ एव। नानुजस्य तथाग्रज इति निषेधात्तदभावे ज्येष्ठ एव; तेन च सपिण्डीकरणं न कार्यम्। कनिष्ठबहुत्वे मृतानन्तरः, तदभावे तदनन्तरादयोऽपि। एवं ज्येष्ठबहुत्वेऽपि मृतानन्तर-क्रमेणैव। सोदराभावे भिन्नोदरः पूर्ववत्। केचित्तु—दुहितृदौहित्रयो रिक्थाधिकारेऽपि विभक्ता संसृष्टस्य दाहादि भ्रात्रैव कार्यम्। सगोत्रसद्भावे भिन्नगोत्रस्य तदनधिकारात्—इत्याहुः। सोदरा-सोदरभ्रातृपुत्रसमवाये पूर्ववत्। तदभावे पिता तदभावे माता।

एवं कन्यानामपि-अधिकार्यन्तराभावे क्रमेण पितरौ, मात्रभावे श्वशुरयोः स्नुषा, तदभावे भगिनी। तत्र अनुजाग्रजासोदरसोदरा-समवाये भ्रातृवत्, तदभावे तत्पुत्रः समवाये तद्वदेव, तदभावे पितृव्यतत्पुत्रादयः सपिण्डाः, तदभावे सोदकाः, तदभावे गोत्रजाः, तदभावे गोत्रजाः, तदभावे मातामहमातुलतत्पुत्रादयो मातृसपिण्डाः क्रमेण, तदभावे तत्सोदकाः, तदभावे स्वबन्धवः, तदभावे पितृबन्धवः, तदभावे मातृबन्धवः-स्वपितृष्वसृमातृष्वसृमातुलसुताः 'स्वबन्धवः', पितुः पितृष्वसृमातृष्वसृमातुलसुताः 'पितृबन्धवः', एवं मातुः मातृष्वसृपितृष्वसृमातुलसुताः 'मातृबन्धवः'-तदभाव आसुरादिविवाहोढा सवर्णाः, तदभावे परिणीताऽसवर्णा, तदभावेऽवरुद्धापि शूद्राव्यतिरिक्ताः, तदभावे शिष्यः, तदभावे ऋत्विकः, तदभावे शिष्यस्याचार्यः सब्रह्मचारी वा। राज्ञि असपिण्डे मृते पुरोहितः, तदभावे मन्त्री, तदभावे भृत्यः। ऋत्विगाद्यभावे जामाता श्वसुरस्य स च तस्य, तदभावे सखा, तदभावे सङ्घातान्तर्गताः। तदभावे विप्रस्य यः कश्चिद्धनहरः, स तद्धिन्नस्य तु राज्ञा धनं गृहीत्वा तेन धनेनान्यद्वारा कारणीयम्; मुमूर्षुणा वाऽनेन धर्मपुत्रः कार्यः।

(12) अथ 'स्त्रियास्तदधिकारिणः'। अनूढायाः पिता, तदभावे भ्रात्रादिः, ऊढायास्तु पुत्राभावे पुत्रिकापुत्रः, तदभावे सपत्नीपुत्रः, तदभावे क्षेत्रजाद्याः प्रपौत्रान्ताः, तदभावे पतिः, तदभावे दुहितृदौहित्रौ क्रमेण, तदभावे पत्युर्भ्राता, तदभावे तत्पुत्रः, तदभावे तत्स्नुषा, तदभावे पितृभ्रातृतत्पुत्रादयः पूर्वोक्ताः। यद्येषां पुत्रासन्निधाने कर्तृत्वम्, तदा सपिण्डीकरणपर्यन्तं क्रियाया एव न तु अन्यैस्तत्कार्यम्; अन्यथा तु तदपि। तत्र सपिण्डादिभिः नृपतेर्दाहमारभ्याशौचमध्यक्रियाः कार्या एव; ता एव पूर्वा इति उच्यन्ते। तत एकादशाहमारभ्य सपिण्डीकरणान्ता मध्यमास्ता-स्वनियमः, तदूर्ध्वाः सांवत्सरिकाद्या उत्तरास्ता न कार्या एव। इदं च तदीयधनाग्रहणे। तद्ग्रहणे तु एतैरप्यवश्यं मध्यमोत्तरा अपि कार्याः। राज्ञस्तुतद्धनसत्त्वे एव तद्धनद्वारा कारणेऽधिकारः; नान्यथा। तद्व्यतिरिक्तानां तु तस्य धनाभावेऽपि स्वधनेनैव पूर्वक्रियाकरणमावश्यकम्। तद्द्रव्यं गृहीत्वा तत्प्रेतकार्याकरणे तद्वर्णवधप्रायश्चित्तं कार्यम्। पुत्राद्यैर्भ्रातृसन्तत्यन्तैर्दौहित्रतत्तनयैश्च तिस्त्रोऽपि कार्याः, तद्धनग्रहणसत्त्वेऽसत्त्वे च। तत्स्त्रीणामुत्तराः क्रिया मृताहन्येव, न दर्शादौ; भर्तृपिण्डेनैव निर्वाहात्। पूर्वमध्यमास्तु पृथगेव। स्त्रीणां पुत्रपत्यभावे तदुत्तरक्रियाधि-कारिभिर्दौहित्रादिभिरपि सपिण्डीकरणरहिता एव कार्या। सपिण्डीकरणं तु न तासाम्, तदभावेऽप्येकोद्दिष्टविधिना वार्षिकं कार्यमेवेति दिक्। इति दाहाद्यधिकारिणः।।

(13) 'दाहश्च' आहिताग्नेस्त्रेताग्निना। तत्राहिताग्निदं पत्योः-यः पूर्वं मृतस्तस्य त्रेताग्निना, पश्चान्मृतस्य लौकिकाग्निना। स च 'कपालाग्निः' अग्निवर्णकपाले कारीषादिना जातोऽग्निः कपालाग्निः। निर्मन्थ्याग्निना तद्दाहो मुख्यः, आहिताग्नेर्ज्येष्ठायां पत्न्यां विद्यमानायां कनिष्ठायाः पत्युरठो मरणे तद्दाहस्त्रेताग्निना निर्मन्थ्याग्निना वा वैकल्पिकः। अनाहिताग्नेः-गृह्याग्निमतस्तु गृह्याग्निना, अग्निमतो ब्रह्मचारिणश्च कपालाग्निना। कपालाग्नावपि ''भूर्भुवः स्वः स्वाहा'' इति आज्याहुतिं कृत्वा दहेत्। अनुपनीताविवाहितबालकन्ययोः तुषाग्निना। सर्वेषा-माहिताग्न्यतिरिक्तानां लौकिकाग्निना वा। तत्र चण्डालाग्न्यादयः प्रागुक्तास्त्याज्याः। शूद्राहृतेन्धनादिना प्रेतकार्ये तत्कृतकर्मणा प्रेतस्य प्रेतत्वनिवृत्त्यभावः, शूद्रस्य च प्रत्यवायः। मृतशरीरा-भावेऽस्थिसंस्कारः, तेषामप्यभावे पालाशप्रतिकृतिदाहः; स चेदाशौचमध्ये तदा तच्छेषेणैव शुद्धिः।

(14) तत्र च दिनशोधः सम्भवे कार्यः कालान्तरे क्रियमाणे तु संशोध्यमेव। तत्रागृहीताशौचपत्नीपुत्रयोः पूर्णमेवाशौचम्। गृहीताशौचयोः त्रिरात्रं द्वादशवर्षप्रतीक्षोत्तरं दाहे तु पुत्रादीनां सर्वेषां त्रिरात्रम्-इति कल्पद्रुमः। तत्र संवत्सरादूर्ध्वं क्रियमाणे-उत्तरायणे श्रेयांस्तत्रापि कृष्णपक्षः। तत्र नन्दा त्रयोदशीचतुर्दशीदिनक्षयान् वर्जयेत्, शुक्रशनैश्चरौ च वारौ, भरणीकृत्तिकारोहिणीत्रिपादाश्लेषार्द्राज्येष्ठामूलमघाधनिष्ठोत्त-राधादिपञ्चकत्रिपुष्कराणि च। त्रिपुष्करश्चविषमचरणधिष्ण्य-भद्रातिथिर्यदि सुरगुरुशनिक्ष्मापुत्राणां वासरे, तदा 'त्रिपुष्करः'; स च वृद्धौ नष्टे हृते मृते च त्रिगुणफलदः। द्वयोर्योगे 'द्विपुष्करः', सोऽपि त्याज्यः। व्यतीपातवैधृतिपरिघांश्च विष्टिं चतुर्थाष्टमद्वादशस्थचन्द्रांश्च। रोहिणीमृगपुनर्वसुपूर्वोत्तराचित्रा-विशाखाऽनुराधापूर्वाषाढोत्तराषाढानि चेति षड्दुष्टानि सम्भवे त्याज्यानि। भौमवारोऽपि त्याज्य इत्यन्ये। गुरुशुक्रास्त-पौषमलमासाः सर्वथा त्याज्याः। मन्वादियुगादिसङ्क्रान्तिदर्शेषु न किमपि शोध्यम्। नन्दायां शुक्रे चतुर्दश्यां त्रिजन्मप्रत्यरिनक्षत्रेषु

चैकोद्दिष्टमतिनिषिद्धम्। साक्षादेकादशाहे तु न कोऽपि निषेधः। युगादिमन्वादिसङ्क्रान्त्यमावास्यासु प्रेतकार्ये पुनः संस्कारे न किञ्चिच्छोध्यम्।

(15) साग्निकस्य पर्णशरदाहे कृते पश्चात्तद्देहलाभ-पर्णशरदाहेऽर्धदग्धकाष्ठानि निर्मथ्य तं दहेत्। तादृशकाष्ठालाभे यथा कथञ्चिद्दग्ध्वा तदस्थि महाजले क्षेप्तव्यम्, एवमन्येषामपि बोध्यम्। पतिपत्न्योरेकस्मिन् काले दहने प्राप्तेसमानवर्णानां सधर्मणां पत्नीनां पत्या सह दहनं कृत्वा, उदकपिण्डादिकं पतिपूर्वं पृथक्कार्यम्; असवर्णानां च दहनमपि पृथगेव। सवर्णानां समानधर्मणां सपत्नीनामपि सहैव दहनं कृत्वा, उदकदानादि ज्येष्ठादिक्रमेण पृथगेव कार्यम्; असवर्णानां तु दहनमपि पृथगेव। पितापुत्रयोः सवर्णयोः समानधर्मणोः कपालाग्निना दाह्ययोर्दाहः सहैव; उदकादि पितृपूर्वं पृथगेव। असवर्णासमान-धर्मणोस्तु सर्वं पृथगेव। भ्रातृणामपि तथाभूतानां सह दाहः, उदकादि ज्येष्ठपूर्वं पृथगेव; असवर्णादीनां तु सर्वं पृथगेव। पुंबालानां भ्रातृणां स्त्रीबालानां च दहने खनने चैवम्। भर्त्रा सहैकचित्यारोहणं सर्वजातिस्त्रीणां पतिव्रतानामुचितं प्रशस्तं च—''दिनैकगम्यदेशस्था साध्वी चेत्कृतनिश्चया। न दहेत्स्वामिनं तस्या यावदागमनं भवेत्। तृतीयेऽह्नि उदक्याया मृते भर्त्तरि वै द्विजाः। तस्यानुमरणार्थाय स्थापयेदेकरात्रकम्'' (निर्णयसिन्धौ पृ.-439)। क्षत्रियादीनां देशान्तरमृतं पतौ पृथक्चित्यामन्वा-रोहणमपि; तच्च तत्पादुकाद्वयमुरसि निधाय कार्यम्। पृथक्चित्या-रोहणं ब्राह्मणानां न भवत्येव। एकचित्यारोहणं च सवर्णानामेव स्त्रीणाम्, असवर्णायास्तु पृथक्चित्यारोहणमेव। इदं च गर्भिणीबालापत्यासूतिकारजस्वलापतिव्यभिचारिणीभर्तृदुष्टभावाभिर्न कार्यम्। तत्रान्वारोहणे त्रिदिनमाशौचम्। रजस्वला यदि देश-कालवशादिना तदैवानुगन्तुमिच्छति, न शुचिं प्रतीक्षते; तदा सा एकद्रोणपरिमितव्रीहीन् मुसलैरवहत्य, तदाद्यातैश्च सर्वरजोनिवृत्तौ पञ्चमृत्तिकाभिः शौचं कृत्वा, दिनक्रमेण त्रिंशद्विंशतिर्दश वागादत्त्वा विप्रवचनाच्छुद्धिं लब्ध्वाऽवरोहेत्। तत्र सह दहनपिण्डश्राद्धादौ पाकैक्यं कालैक्यं कर्त्रैक्यं च भवति; पृथक्सपिण्डीकरणं च न। पृथक्चित्यारोहणे सर्वं पृथक्। यस्य तु जीवत एव मृतिवार्तां श्रुत्वा स्त्रियाऽनुगमनं कृतम्, तदवैधमेव; ज्ञातमरणस्य एवानुगमनादौ निमित्तत्वात्तस्य च तत्राभावात्। मरणज्ञानमात्रं तु न निमित्तम्, अनागततज्ज्ञानस्यापि निमित्तत्त्वापत्तेरित्याहुः।

(16) श्मशानाय नीयमानशवस्य शूद्रस्पर्शे शूद्रेण वहने वा ''कुम्भे सलिलमादाय पञ्चगव्यं तथैव च। पुण्याभिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः। तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि'' (मिताक्षरा, पृ.-311) इत्युक्तम्। सूतिकोदक्या स्पर्शेऽप्यमेव। शूद्रेण द्विजदाहे तु चान्द्रायण-पराकप्राजापत्यानि समुच्चयेन तत्पुत्रादिः कृत्वा प्रेतास्थीनि पुनर्विधिवद्दहेत्; तदभावे पालाशविधिः। ऊर्ध्वोच्छिष्टा-धरोच्छिष्टोभयाच्छिष्टेषु कृच्छ्रत्रयम्, अस्पृश्यस्पर्शने षट् ते, अन्तरालमृतौ नव, खट्वामरणे द्वादश, निगडबन्धनमृतौ पञ्चदश, रजकाद्यस्पृश्यस्पृष्टमरणे तु एकत्रिंशत्कृच्छ्राणि। अर्धदग्धे शवे चितेरस्पृश्य स्पर्शेत्तु कृच्छत्रयम्। एवं भक्ताः पुत्रादयः पापिनः पित्रादेः प्रेतस्य प्रायश्चित्तत्प्रकरणोक्तं पापयोग्यं प्रायश्चित्तं कृत्वा प्रेतं दहेयुः। एवं कर्ताऽपि सम्भावितपापानां स्वीयानां कृच्छ्रत्रयाच्छुद्धिं कृत्वा दहनादि कुर्यात्। एवं विनैव प्रायश्चित्तं कृतं दाहादि व्यर्थं भवति; उभयोश्च नरकः। अत्र मरणकाले वैतरणी धेनुरुत्क्रान्तिधेनुदानगौभूतिलहिरण्याज्य-धान्यवस्त्रगुडरूप्यलवणेतिदशदानतिलपूर्णताम्रपात्रदानान्यवश्यं कार्याणि; तत्करणं विनैव प्रेते पुत्रादिभिः प्रेतोद्देशेन तानि कार्याणि। देशान्तरमरणे पराकद्वयमष्टौ कृच्छ्रान् वा कृत्वा दहेत्। तथा दूरदेशान्तरगते मरणजीवनयोरनिश्चये पुनः पुनः पर्यालोच्य, सर्वथा जीवद्वार्तायाम् अश्रूयमाणायां पूर्ववयस्क एकविंशत्यब्दादूर्ध्वम्, मध्यवयस्के पञ्चदशाब्दादूर्ध्वम्, परवयस्के द्वादशाब्दादूर्ध्वं चान्द्रायणत्रयं त्रिंशत्कृच्छ्राणि वा कृत्वा, पलाशैः कुशैर्वा प्रतिकृतिं कृत्वा दाहाशौचादि कार्यम्। एवं कृते पुनः समागतश्चेत्तं घृतकुण्डे निमज्य तस्य जातकर्मादि संस्कारान् कृत्वा पूर्वपत्न्या सह विवाहं कुर्यात्।।

●

RNI No. : UPMUL/2017/71477

# पीताम्बरामृत

**वर्ष-9, अङ्क-100, अप्रैल 2025**

**संस्थापक**

**डॉ. मनोज कुमार चतुर्वेदी, अध्यक्ष, पीताम्बराशक्तिपीठम्, लखनऊ**



## अनुक्रमणिका



●



**प्रकाशक एवं प्रधान सम्पादक : अमृतांश चतुर्वेदी द्वारा स्वामी ''पीताम्बराशक्तिपीठम्'' के पक्ष में गॉस्पेल प्रेस, लखनऊ से मुद्रित एवं 11A 167, वृन्दावन कालोनी, लखनऊ से प्रकाशित**

**email :** *pitambaramrit@gmail.com*